ह्रीः

# दुर्लभबौद्धग्रन्थशोधपत्रिका

# Journal of Rare Buddhist Texts

## 15

दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, बाराणसी
1993

ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

# 15

सम्पादक

प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक



भोटविद्या संस्थानम्

दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

बुद्धाब्द २५३७ बुद्ध पूर्णिमा ख्रीस्ताब्द १९९३

# Dhīḥ

## Journal of Rare Buddhist Texts

# 15

*Editors*

*PROF. SAMDHONG RINPOCHE*
**Project Director**

*PROF. VRAJVALLABH DWIVEDI*
**Deputy Director**



भोटविद्या संस्थानम्

**RARE BUDDHIST TEXT RESEARCH PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**

**B.E. 2537** **BUDDHA PŪRṆIMĀ** **C.E. 1993**

# धीः XV

## विषयानुक्रमणी



●

लाभालाभे च येषामयशसि यशसि स्फारिदुःखे सुखे च
निन्दायां संस्तुतौ च क्षतसकलमलं तुल्यमेव स्वचेतः ।
मुक्तं सर्वैर्विकल्पैर्जगति सकरुणं चर्यया नैव सक्तं
युक्तं तेषां करस्थं सुगतपदमिति प्रोक्तवान् वज्रसत्त्वः ।।

—प्रज्ञोपायविनिश्चयसिद्धिः 5.48

# सुप्रभातस्तोत्रम्

[ यह स्तोत्र डॉ० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से प्राप्त हुआ है। इसका भोटानुवाद तो० 1167 में उपलब्ध है। इसे F. W. Thomas ने 'जर्नल आफ रॉयल एशियाटिक सोसाइटी ग्रेट ब्रिटेन एण्ड आयरलैंड', 1903 ई० में तिब्बती अनुवाद सहित रोमन में प्रकाशित किया था। इन दोनों प्रतियों के श्लोकक्रम में पर्याप्त अन्तर है। हमने मूल प्रति के 'क' और प्रकाशित के 'मु' संकेत से पाठ-भेद दे दिये हैं। किन्तु क्रम मूल पाण्डुलिपि का रखा है। यह दशबल स्तोत्र नाम से भी प्रसिद्ध है। ]

स्तुतमपि सुरसङ्घैः सिद्धगन्धर्वयक्षै-
र्दिवि भुवि सुविचित्रैः स्तोत्रवाग्भिर्यतीशैः।
अहमपि कृतशक्तिर्नौमि संबुद्धमार्यं
नभसि गरुडयाते किं न यान्ति द्विरेफाः ॥ १ ॥

क्षपितदुरितपक्षः क्षीणनिःशेषदोषो
द्रवितकनकवर्णः फुल्लपद्मायताक्षः।
सुरुचिरपरिवेषः सुप्रभामण्डलश्रीः
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ २ ॥

मदनबलविजेतुः कापथोच्छेदकर्तु-
स्त्रिभुवनहितकर्तुः स्त्रीलताजालहर्तुः।
समसुखफलदातुर्भेत्तुरज्ञानशैलं
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ ३ ॥

असुरसुरनराणां योऽग्रजन्माग्रदेवः
सकलभुवनधातौ लोकसृष्टचैकशब्दः।
स्वपिति मनुजधाता अब्जयोनिः स्वयम्भू-
र्दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ ४ ॥

उदयगिरितटस्थो विद्रुमच्छेदताम्र-
[1]स्तिमिरनिकरहन्ता चक्षुरेकः प्रजानाम्।
रविरपि मदलोलः सर्वथा सोऽपि सुप्तो
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ ५ ॥

---

1. तिमिरकुल–मु.।

द्विरददशनपाण्डुः शीतरश्मिः शशाङ्क-
स्तिलक इव रजन्याः सर्वचूडामणिर्यः।
अविगतमदरागः सर्वथा सोऽपि सुप्तो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ ६॥

प्रबलभुजचतुष्कः षोडशार्धार्धवक्त्रो
जपनियमविधिज्ञः सामवेदप्रवक्ता।
अमलकमलयोनिः सोऽपि ब्रह्मा प्रसुप्तो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ ७॥

हिमगिरिशिखरस्थः सर्पयज्ञोपवीती
त्रिपुरदहनदक्षो व्याघ्रचर्मोत्तरीयः।
सह गिरिवरपुत्र्या सोऽपि सुप्तस्त्रिशूली
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ ८॥

ज्वलितकुलिशपाणिर्दुर्जयो दानवानां
सुरपतिरपि शच्या विभ्रमे मूढचेताः।
अनिशिनिशिप्रसुप्तः कामपङ्के निमग्नो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ ९॥

कुवलयदलनीलः पुण्डरीकायताक्षः
सुररिपुबलहन्ता विश्वकृद्विश्वरूपी।
हरिरपि चिरसुप्तो गर्भवासैरमुक्तो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ १०॥

कपिलजटकलापो रक्तताम्रारुणाक्षः
पशुपतिरतिकाले [1]सङ्गभङ्गैकदक्षः।
स्मरशरदलिताङ्गः सोऽपि सुप्तो हुताशो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ ११॥

हिमशशिकुमुदाभो मद्यपानारुणाक्षो
दृढकठिनभुजाङ्गो लाङ्गली शक्तिहस्तः।
बल इह शयितोऽसौ रेवतीकण्ठलग्नो
दशबल तव नित्यं सुप्रभातं प्रभातम्॥ १२॥

---

1. दग्धकोपातिदक्षः–मु.।

गजमुखदशनैकः सर्वतो विघ्नहन्ता
[1]विगलितमदवारिः षट्पदाकीर्णगण्डः ।
गणपतिरपि सुप्तो वारुणीपानमत्तो
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १३ ॥

अतसिकुसुमनीलो यस्य शक्तिः कराग्रे
नवकमलवपुष्मान् षण्मुखः क्रौञ्चहन्ता ।
त्रिनयनतनयोऽसौ नित्यसुप्तः कुमारो
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १४ ॥

अशनवसनहीना [2]भाव्यमाना विरूपा
अलमखिलविघातैः प्रेतवद्दग्धदेहाः ।
उभयगतिविहीनास्तेऽपि नग्नाः प्रसुप्ता
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १५ ॥

ऋषय इह महान्तो वत्सभृग्वङ्गिराद्याः
क्रतुपुलहवसिष्ठा व्यासवाल्मीकिगर्गाः ।
परयुवतिविलासैर्मोहितास्तेऽपि सुप्ताः
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १६ ॥

यमवरुणकुबेरा यक्षदैत्योरगेन्द्राः
दिवि भुवि गगने वा लोकपालास्तथान्ये ।
युवतिमदकटाक्षैर्वीक्षितास्तेऽपि सुप्ता
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १७ ॥

भवजलनिधिमग्ना मोहजालावृताङ्गा
मनुकपिलकणादा भ्रामिता मूढचित्ताः ।
सममुखपरिहीना बालिशास्तेऽपि सुप्ता
दशबल तव नित्यं सुप्रभातं प्रभातम् ॥ १८ ॥

अज्ञाननिद्ररजनो तमसि प्रसुप्ता
तृष्णाविशालशयने विषयोपधाने
काले शुभाशुभफलं परिकीर्यमाणे
जागर्ति यः सततमेव नमोऽस्तु तस्मै ॥ १९ ॥

---

1. अविरतमदवारिः–क । 2. नित्ययोगानुयुक्ता–क. ।

तीर्थेषु गोकुलशतानि पिबन्ति तोयं
तृप्तिं व्रजन्ति न च तत्क्षयमभ्युपैति।
तद्वन्मुने कविशतैरपि संस्तुतस्य
न क्षीयते गुणनिधिर्गुणसागरस्य ॥ २० ॥

सुप्रभातं तवैकस्य ज्ञानोन्मीलितचक्षुषः।
अज्ञानतिमिरान्धानां नित्यमस्तमितो रविः ॥ २१ ॥

पुनः प्रभातं पुनरुत्थितो रविः पुनः शशाङ्कः पुनरेव शर्वरी।
मृत्युर्जरा जन्म तथैव हे मुने गतागतं मूढजनो न बुद्ध्यते ॥ २२ ॥

सुप्रभातं सुनक्षत्रं श्रिया प्रत्यभिनन्दितम्।
बुद्धं धर्मं च सङ्घं च प्रणमामि दिने दिने ॥ २३ ॥

स्तुत्वा लोकगुरुं महामुनिवरं सद्धर्मपुण्योद्गमं
निर्द्वन्द्वं हतरागद्वेषतिमिरं शान्तेन्द्रियं निस्पृहम्।
यत्पुण्यं समुपार्जितं खलु मया तेनैव लोकोऽखिलं
प्रत्यूषस्तुतिहर्षितो दशबले श्रद्धां परां विन्दताम् ॥ २४ ॥

॥ इति श्रीहर्षदेवभूपतिविरचितं दशबलस्य सुप्रभातस्तोत्रं समाप्तम् ॥

# रत्नमालास्तोत्रम्

[ यह स्तोत्र इण्डियन एडवांस स्टडी आफ वर्ल्ड रिलीजन, न्यूयार्क से माइक्रोफिश प्लेट रूप में शान्तरक्षित ग्रन्थालय में प्राप्त पंचाशत्स्तोत्रसंग्रह से लिया गया है। इसका भोटानुवाद तो० 1174 में उपलब्ध है। ]

लोकेश्वरं विमलशून्यकृपार्द्रचित्तं
मार्गज्ञताप्रथितदेशनयार्थवाचम्।
सर्वज्ञतादिपरिपूर्णविशुद्धदेहं
ज्ञानाधिकारललितं शिरसा नमामि ॥ १ ॥

वैनेयभेदवशतो बहुधावभासै-
रेकोऽपि पात्रगजलेषु शशीव यस्मात्।
संलक्षसे परहितानुगतैव तस्माद्
बुद्धिस्त्वहो परमविस्मयनीयरूपा ॥ २ ॥

संपूर्णचन्द्रवदने ललितो ललाट-
देशाद्विनिर्गतमहेश्वरदेवपुत्रः।
वैनेयशाम्भवजनप्रतिबोधनार्थं
देवाधिदेवप्रतिमानुज ईश्वरस्त्वम् ॥ ३ ॥

वैनेयकोमलभवप्रतिबोधनाय
किं धाम संभृतमहाशुभलक्षणं ते।
निर्यात एव हि पितामहदेवपूजां
लोकेश्वरेश्वरपरं शिरसा नमामि ॥ ४ ॥

वैनेयवैष्णवजनप्रतिबोधनाय
राजीवपाणिहृदयात् प्रतिनिःसृतोऽसौ।
नारायणोऽपि भुवनेश्वर एव तस्मात्
पुंसां त्वमेव परमोत्तम एव नान्यः ॥ ५ ॥

चन्द्रार्कसादरबलाहितभक्तिभाजां
संदर्शनार्थमिभनीलसुलोचनाभ्याम् ।
यन्निःसृतौ शशिरवी भुवि लोचनाभ्यां
ध्वस्तान्तरालतमसं तमहं नमामि ॥ ६ ॥

सारस्वतीविनययोजितभक्तिभाजां
बोधाय वै भगवतीह सरस्वतीयम् ।
दृष्टाग्रतस्तव जिनात्मजपप्रसूता
प्रज्ञाभिलाषिफलदं तमहं नमामि ॥ ७ ॥

वैनेयवायुजनिताक्षरमार्गसिद्धयै
यो लोकनाथ सुगतोऽथ विनिःसृतोऽसौ ।
देवः समीरणवरो भुवि जन्मभाजा-
मीर्यापथार्थफलदं तमहं नमामि ॥ ८ ॥

वैनेयवारुणशिवायनमीप्सितानां
संबोधनार्थमुदरात्सुगतात्मजानाम् ।
यन्निःसृतो वरुणदेववरोऽप्यकस्मा-
दैश्वर्यसिद्धिफलदं तमहं नमामि ॥ ९ ॥

वैनेयसंमतफलाद्यभिलाषिणो वै
संसिद्धये प्रवरलक्षणपादपद्मे ।
यन्निःसृता भगवती धरणी प्रसिद्धा
त्रैलोक्यनाथमसमं सततं नमामि ॥ १० ॥

संसारमुक्तमपि सुस्थितमेव तत्र
कारुण्यतश्च भवचारिणि सत्त्ववर्गे ।
भूयात् स्थितिर्मम सदास्थिरसा भवन्त-
मेवं महाशयवरं परमं नमामि ॥ ११ ॥

एकेन पादतलकेन भवत्स्वकेन
चक्रान्तसंवरमनन्तरलोकधातौ ।
कल्पान्तदग्धभुवने ज्वलितोग्रवह्नि-
निःश्वासवायुबलतस्तव निर्वृतः स्यात् ॥ १२ ॥

स्वां तर्जनीं मुखधृतोऽहिततर्जनेन
संचालिताश्च बहुमेरुगणा नखस्य ।
कोषोद्धृतं जलधितोयमशेषतः स्यात्
सामर्थ्यमीदृशमहो भवतः कुतोऽन्यत् ॥ १३ ॥

क्वेदं च शैशवपरं ननु चारुरूपं
संदर्शनीयवरकोमलबालचन्द्रम् ।
दुर्वारमारमथनं च मयैकसह्यं
विक्रान्तदुःसहपरं क्व च चेष्टितं ते ॥ १४ ॥

एषा बताञ्जननिभोरुजनावली सा
कौटिल्यचारुविकटा स्वशिरोरुहाग्रे ।
क्लेशेन्धने ज्वलितविस्फुरितत्ववह्ने-
र्धूमावलीव विमला ननु लक्ष्यते ते ॥ १५ ॥

त्वत्कान्तिलेशविमला दशदिक्प्रतानैः
पक्षासितक्षयकृशा सकला सुशोभा ।
पर्यन्त इष्टशशिनो भुवनेषु यत्ते
मन्ये विराजि निखिलं तव कान्तिलेशात् ॥ १६ ॥

बन्धुर्हि को मार्गिकसंमतं मतं नरो नरी सा स पथं पथम्
परार्थसंपादितसंवरं वरं नमामि भूमीश्वरराजिनं जिनम् ॥ १७ ॥

अनित्यनिर्वाणपदे स्थितं स्थितं प्रभास्वराधिष्ठितसंहितं हितम् ।
शमीकृताशेषजनं शिवं शिवं नमामि भूमीश्वरराजिनं जिनम् ॥ १८ ॥

गभस्तिमालामितसंकुलं कुलं तत्र स्वपाणौ धृतपङ्कजं कजम् ।
रतानुगाशोभितसंरतं रतं नमामि भूमीश्वरराजिनं जिनम् ॥ १९ ॥

स्वधर्मधातुं करुणापरं परं शुभादिसंभारसुसंभृतं भृतम् ।
विकल्पहीनं ध्वनिदेशकं शकं नमामि भूमीश्वराजिनं जिनम् ॥ २० ॥

तथतातथताद्वयशातशतं सदसत्परिपूरितधर्मकथम् ।
कथनीयविराजितसत्यपरं प्रणमे धरणीश्वरराजवरम् ॥ २१ ॥

वरवारिजरूपि जगत्प्रसरं सरसीरुहलोचनचारुतरम् ।
तरसापि रसत्वविशुद्धिपरं प्रणमे धरणीश्वरराजवरम् ॥ २२ ॥

वरनिर्मितभोगपरार्थरतं रतशून्यनिरञ्जनधर्मधरम् ।
धरणीन्द्रविभूषितसिद्धिपरं प्रणमे धरणीश्वरराजवरम् ॥ २३ ॥

वरसत्सहजोदधिचन्द्रमुखं सुखभाषितसत्त्वविमुक्तिपदम् ।
पदभूषणलक्षणतानुपरं प्रणमे धरणीश्वरराजवरम् ॥ २४ ॥

लोकेश्वरेयं(मां) तव रत्नमालामचीकरच्छ्रीवनरत्नपादः ।
अवापि यत्तेन शुभप्रविष्टं तेनैव लोकोऽस्तु समन्तभद्रः ॥ २५ ॥

इति श्रीमदार्यावलोकितेश्वरभट्टारकस्य रत्नमालास्तोत्रं समाप्तम् ॥

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ प्रस्तुत अंक में निम्नलिखित ग्रन्थों का परिचय दिया जा रहा है—

1. क्रियासंग्रहपञ्जिका—कुलदत्त

( इसके साथ आर्य नागार्जुन की वे मूल कारिकाएँ भी दी गई हैं, जिनकी यह व्याख्या है । )

2. अभिधानोत्तरतन्त्र

3. योगिनीसंचारतन्त्र

4. योगिनीसंचारतन्त्रटीका—अलक कलश

5. गुह्यावली—दउड़ीपाद ( संपूर्ण ) ]

## 1. क्रियासंग्रहपञ्जिका

**ग्रन्थ**—क्रियासंग्रहपञ्जिका

**ग्रन्थकार**— महापण्डित कुलदत्त

**संख्या**—1.318

**पत्रसंख्या**—145, **पंक्ति प्र० प०**—6, **अक्षर प्र० पं०**—62

**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण**

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय

महागमात्समाम्नायात् सच्छिष्याध्येषणावशात् ।
वज्रसत्त्वं जगन्नाथं नत्वेयं क्रियते मया ॥

सेवादिभूशोधनभूपरिग्रहौ पादस्य संस्थापनदारुकर्मणी ।
देवप्रतिष्ठा च तथैव गण्डी ध्वजोच्छ्रयं शेषत एव कार्यम् ॥

परीक्षा गुरुशिष्याणां गुरोरध्येषणा ततः ।
मन्त्रसेवां गुरुः कुर्यात् ततो भूमेः परीक्षणम् ॥

**अन्त**

ततो वह्नौ यदा होमाग्निर्निर्वाणमुपगच्छति, तदा रजःप्रवाहोक्तविधिनैव भस्मप्रवाहं कुर्यादिति ।

निरीक्ष्य तन्त्रं निखिलं मयेयं संगृह्यते चारुतरा विशुद्धा।
नापूर्वशब्देन सुशोभनेन तथापि सन्तः सुधियः क्षमध्वम् ॥
सारं सरलमनर्थं श्रीकुलदत्तेन योजितं ग्रन्थम्।
यजमानमनोहरणं निखिलाचार्यस्य परमाभरणम् ॥
पञ्जीं विधाय विधिना यदवापि शुभं मया।
वज्रसत्त्वोऽस्तु लोकोऽयं तेनाबन्धमयो वरः ॥

**पुष्पिका**

इति महापण्डितनिःसंगाचार्य-श्रीकुलदत्तविरचिता क्रियासंग्रहनाम पञ्जिका समाप्ता।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म राष्ट्रीय अभिलेखालय, काठमांडू नेपाल से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, इसी के आधार पर यह विवरण दिया जा रहा है।

**विशेष वक्तव्य**

अभी तक यही समझा जाता रहा है कि क्रियासंग्रह श्रीकुलदत्त की स्वतन्त्र रचना है, किन्तु इसके प्रत्येक प्रकरण की अवान्तर पुष्पिकाओं में 'कुलदत्त-विरचितायां क्रियासंग्रहपञ्जिकायां ...... प्रकरणम्' देख कर सन्देह हुआ कि यह किसी ग्रन्थ की व्याख्या तो नहीं है? संयोग से राष्ट्रीय संग्रहालय, नेपाल के सूचीपत्र भाग 7, खण्ड 1, पृष्ठ 121 में श्री नागार्जुन पाद के एक ग्रन्थ **क्रिया-संग्रहकारिका** का उल्लेख मिला, जिसका केवल अन्तिम पत्र ही उन्हें प्राप्त हुआ है। उस पत्र में जितना अंश उपलब्ध है, वही इस क्रियासंग्रहपञ्जिका के 6 से 8 प्रकरणों की प्रारम्भिक कारिकाएँ हैं। इससे प्रतीत होता है कि अवश्य ही यह पञ्जिका श्री नागार्जुनपाद रचित कारिकाओं की विस्तृत व्याख्या है। श्री कुलदत्त ने प्रत्येक प्रकरण के प्रारम्भ में व्याख्येय कारिकाएँ दी हैं, तब उनमें व्यक्त विषयों का विवेचन किया है। प्रस्तुत ग्रन्थ के अनुसार वे कारिकाएँ (उक्त सूचना के आधार पर, जिन्हें नागार्जुन पाद की ही रचना माना जा सकता है) इस प्रकार हैं—

परीक्षा गुरुशिष्याणां गुरोरध्येषणा ततः।
मन्त्रसेवां गुरुः कुर्यात् ततो भूमेः परीक्षणम् ॥ 1 ॥ (प्रथम प्रकरण)

देवतायोगयुक्तः सन् महीपूजां विधाय च।
देवतोत्थापनं कृत्वा शोधयेन्मेदिनीं ततः ॥ 2 ॥ (द्वितीय प्रकरण)

यवानां रोपणं कृत्वा जाङ्गुलीं चापि पूजयेत् ।
सूत्रं संपात्य यत्नेन वास्तुनागं परीक्षयेत् ॥ 3 ॥ (तृतीय प्रकरण)

इष्टकालक्षणं सम्यग् ज्ञात्वादिग्ग्रहणं ततः ।
सम्यगायव्ययौ ज्ञात्वा प्रासादस्य च लक्षणम् ॥ 4 ॥

देवदिक्पालवसुधाः सम्पूज्य च यथाविधि ।
ईतिकारोपणं कृत्वा होमं कुर्यात् प्रमोहनम् ॥ 5 ॥ (चतुर्थ प्रकरण)

वनयात्रा ततो द्वारं सम्यगुत्थापयेत्सुधीः ।
संस्थाप्य च शिरोदारु जुहुयादमृतानलम् ॥ 6 ॥ (पञ्चम प्रकरण)

वज्राचार्यप्रवेशोऽस्मिन् समाधित्रयभावना ।
परिक्रमार्थसूत्राणां पातनं रजसामपि ॥ 7 ॥

अग्निक्रियाविधानं च पिण्डिकास्थापनं ततः ।
सव्यक्षणेन निष्पाद्य प्रतिमां स्थापयेत्ततः ॥ 8 ॥ (षष्ठ प्रकरण)

चित्रकर्म वलिः पिण्डी गण्डिकालक्षणं ततः ।
एतेषां च प्रतिष्ठानं प्रव्रज्याग्रहणं तथा ॥ 9 ॥ (सप्तम प्रकरण)

लक्षणं धर्मधातूनां ध्वजानामवरोपणम् ।
जीर्णोद्धारोपसंहारौ पूजयेद् गणमण्डलम् ॥ 10 ॥ (अष्टम प्रकरण)

**विषयनिर्देश**

यद्यपि उपर्युक्त कारिकाओं के अनुसार ही प्रत्येक प्रकरण में विषयों का विवेचन और प्रक्रिया का निर्देश किया गया है, तथापि प्रकरणवशात् अन्य विषयों की विधियाँ भी बताई गई हैं, जो इस प्रकार हैं—

**प्रथम प्रकरण**—आचार्यपरीक्षा, शिष्यपरीक्षा, गुरु की अध्येषणा, सम्भारजननी पूर्वसेवा, भूमिपरीक्षा, शुभलक्षण, भूमिपरिग्रह ।

**द्वितीय प्रकरण**—शुभाशुभ ज्ञानार्थ कुमारिकापूजन, भूशोधनार्थ शल्यपरीक्षा, शुभशल्य, भूमिपूजा, देवोत्थापन, भूमिशोधन ।

**तृतीय प्रकरण**—यवारोपण, जाङ्गुलीपूजन, चिह्नलेखन, कलशस्थापन, कीलकावस्थापन, कीलनाकोटन, विघ्नकीलन, सूत्रपातन, निमित्तोपलक्षण, वास्तुनागपरीक्षा, वास्तुनागक्रोडभञ्जन, क्रोडलक्षण, बाह्यपूजा होमादि ।

**चतुर्थ प्रकरण**—आयव्ययाभिधान, प्रासादादिलक्षण, विशेषलक्षण, देवालय के लिये विशेषलक्षण, पादस्थापन, इष्टकाधिष्ठान ।

**पञ्चम प्रकरण**—दारुकर्म, शिलाकर्म, अशुभनिमित्त संग्रह, दारु आदि का प्रमाण, वर्णभेद से अंगुलिभेद, स्तम्भ प्रमाण, स्तम्भों के स्वरूप, द्वारस्थापन, अग्निपूजा, कुरुकुल्ला-धारणी-जाङ्गुलीधारणी अभिलेपन व इनके मन्त्र ।

**षष्ठ प्रकरण**—वज्राचार्य प्रवेश, देवतायोग, अध्यात्मभूमि शोधन, विघ्नोत्सारण, पदसाधन, आलीढ से 11 अभिनय, प्रत्यालीढ से 10 अभिनय, एकपद से 2 अभिनय, वज्र-सत्त्वाभिनय, प्रधानाचार्य के 8 अभिनय, पूर्वदिक्स्थ आचार्य के 9 अभिनय, आक्षेपक क्रोधों के नाम और वर्ण, विविध आसनों से भिन्न-भिन्न मुद्राबन्धन, खदिरवज्र-कीलक, कीलनाकोटन, परिक्रमण विधि, पिण्डिका में सूत्रपातन, टिप्पसूत्रणविधि, बाह्यमण्डल, कलशस्थापन, वज्राधिवासन, सूत्रवलन, वलिविधि, देवताधिवासन, अभ्यन्तरमण्डल सूत्रण, बाह्यमण्डल लोपन, तन्त्रोक्तसूत्रण, देवताचिह्नपातन,रजः-पातनविधि, मण्डलाधिवासन, धर्मदेशनाश्रावण, शिष्याधिवासन, शिष्यप्रवेश विधि, संवरग्रहण, पठन, पञ्चाभिषेक, वज्रव्रतदान, मण्डलतत्त्व, आश्वासदान, अवैवर्तकाभिषेक, आचार्याभिषेक, कलशाभिषेक, गुह्याभिषेक, प्रज्ञाज्ञानाभिषेक, चतुर्थाभिषेक, अग्निक्रिया, पात्रीश्रुवालक्षण, शुभाशुभनिमित्त परीक्षण, पूर्णाहुति होम, लक्षाहुति में हव्यप्रमाण, लक्षाहुति होमविधान, श्मशानपूजा, रजोविभाग, पिण्डिका-स्थापनार्थ कोष्ठक विभाग, पिण्डिकालक्षण, विहारप्रतिष्ठा, प्रतिमालक्षण, देहमान, परिणाहिप्रमाण, प्रतिमा के रूपगुणदोष, तालानुरूप प्रतिमालक्षण, पटपुस्तक प्रतिमादि की दश क्रिया, पुंसवन, जातकर्म, उपनयन, चूडाकर्म, समापवर्तन, पाणि-ग्रहण, अवराभिषेक, आचार्याभिषेक, चतुर्थाभिषेक ।

**सप्तम प्रकरण**—चित्रकर्म, वलिपिण्डिकाघटन, वरुण वैश्रवण महाकाल महाबल यक्षराज बलिपिण्डिका स्थापन, चतुर्विधगण्डी, गण्ड्याकोटन, प्रव्रज्याग्रहण, पञ्चशिक्षापददान, प्रव्रज्याविधि ।

**अष्टम प्रकरण**—धर्मधातुलक्षण, सामान्येन विशुद्धि, ध्वजारोपण, छत्रचामरादिप्रतिष्ठा, जीर्णोद्धारविधि, मण्डलोपसंहारविधि, पञ्चविधज्येष्ठानुक्रम, गणचक्रविधि ।

यह ग्रन्थ पाण्डुलिपि की ही फोटो लेकर देवनागरी लिपि में शतपिटक सीरीज, वाल्यूम 236 में प्रकाशित है ।

## 2. अभिधानोत्तर तन्त्र

**ग्रन्थ**—अभिधानोत्तर तन्त्र

**संख्या**—इ 695.3, 696.1

**पत्रसंख्या—247, पंक्ति प्र० प०—6, अक्षर प्र० पं०-41**
**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण**

**प्रारम्भ**

नमः श्रीचक्रसंवराय
षड्गतेर्यत्र पर्यन्तं सर्वबुद्धविकुर्वितैः ।
क्रियते वज्रसत्त्वेन तं गीतेधर्मधातुके ॥

श्रीमते वज्रडाकाय डाकिनीचक्रवर्तिने ।
पञ्चज्ञानत्रिकायाय त्राणाय जगतो नमः ॥

यावन्त्यो वज्रडाकिन्यश्छिन्नसंकल्पबन्धनाः ।
लोककृत्यप्रवर्तिन्यस्तावतीभ्यो नमः सदा ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् सर्वतथागतो वज्रक्रोधडाकिनीगुह्यहृदयेषु विजहार । तत्र भगवन्तं सर्वतथागता भगवन्तमनादिनिधनं श्रीवज्रसत्त्वमध्येष-यन्ति स्म । देशयतु भगवान् सर्वतथागतवज्रक्रोधडाकिनीजालसंवरमऽभिधानोत्तरं हृदयं वज्रपाणे महाक्रोधाधिपते पर्षद्विविधनानाविकुर्वणाविजृम्भितम् । शृणु साधु च सुष्ठु च मनसि कुरु भाषिष्ये, तत्साधु भगवन्निति कृताञ्जलिपुटाः प्रणि-पत्यैवमाहुः ।

**अन्त**

अथ भगवान् सर्वतथागत इदं ज्ञानं गुह्यरहस्यमुदाजहार—

निःस्वभावात्मका धर्मा आकाशमिव निर्मलाः ।
शून्यताज्ञानवज्रेण शून्यताऽत्यन्तभावना ॥
साधुकारं ददन्ति स्म तन्तुनिष्पत्तियोगतः ।
साधु साधु महाज्ञान अभिधानोत्तरोत्तरे ॥

साधु वज्रनयं रौद्रं बुद्धबोधिप्रसाधनम् ।
साधु निश्चययोगं च निराकाङ्क्षविभावना ॥

साधु सर्वजगन्नाथ महायोगस्य देशक ।
सम्प्रदायं प्रवक्ष्यामि योगमार्गं च उत्तमम् ॥

साधु वज्रगुरुः सर्वयोगिन्यास्तन्त्रदेशकः ।
साधु पर्षदचक्रेभ्यो सिद्धिं ददत्यनुत्तरम् ॥

इति तूष्णीमभवन् । इदमवोचद् भगवान् वज्रसत्त्वस्ते च सर्वतथागतक्रोधराजाभि-धानोत्तरोत्तरडाकडाकिनीजालसंवरं भगवतो भाषितमभ्यनन्दन्निति ।

## पुष्पिका

अभिधानोत्तरोत्तरोनाम महातन्त्रराजः समाप्तः।

## विवरण

इस ग्रन्थ की माइक्रोफिल्म नेपाल राष्ट्रीय संग्रहालय, काठमांडू से शान्तरक्षित ग्रन्थालय में आई है, जिसके आधार पर यह विवरण तैयार किया गया है।

## विषय निर्देश

इस ग्रन्थ में प्रतिपादित विषयों का निर्देश प्रत्येक पटल की अवान्तर पुष्पिका में किया गया है, जो इस प्रकार है—

इति अभिधानोत्तरे अवतारणसमयशुद्धरहस्यपटलः प्रथमः।
" " प्रार्थनापटलो द्वितीयः।
" " हृदये तत्त्वपरमार्थपटलस्तृतीयः।
[ इसी पटल के अन्तर्गत तीन अवान्तर पटल आये हैं—
इति कायसंवरविधिः प्रथमः पटलः
महासुरतपद्मजालसंवर-अभिधानोत्तरपटलो द्वितीयः।
अभिधानोत्तरोत्तरसंवरगुरुपालिपटलस्तृतीयः। ]

इति अभिधानोत्तरे समयसंवरपटलश्चतुर्थः।
" " पीठपर्वक्रमपटलः पञ्चमः।
" " सर्वानवस्थितक्रमभेदविधानो नाम षष्ठः पटलः।
" " मञ्जुवज्रविधिपटलस्त्रिचक्रोल्लिप्तः सप्तमः।
" " पीठसिद्धिपटलोऽष्टमः।
" " योगिनीपीठसिद्धिक्रमनिमित्तनिर्देशो नाम नवमः पटलः।
" " कोशप्रस्तावपीठसम्प्रदायपटलो दशमः।
" " पीठादियोगिनी एकादशः पटलः।
" " श्रीहेरुकडाकिन्या वीरयोगिन्या डाकिनीभावनोत्पत्तिर्द्वादशः पटलः।
" " आदिकर्मकयोगभावनापटलस्त्रयोदशः।
" " मध्येन्द्रियभावनोपदेशपटलश्चतुर्दशः।
" " तीक्ष्णेन्द्रियभावनोपदेशपटलः पञ्चदशः।
" " चतुर्डाकिनीयोगसंवरविधिपटलः षोडशः।
" " योगसंवरविनयपटलः सप्तदशः।

इति अभिधानोत्तरे प्रत्यङ्गिरापटलोऽष्टादशः।
" " अमृतसञ्जीविन्याः सर्वकर्मकरी नाम भावनापटल ऊनविंशतितमः।
" " योगिनीगुह्यसमयतत्त्वावतारणपटलो विंशतितमः।
" " कुलषट्चक्रवर्तिसम्प्रदायपटल एकविंशतितमः।
" " कायवाक्चित्तपीठानुक्रमपटलो द्वाविंशतितमः।
" " समयोत्थापनबुद्धकपालोत्पत्तिस्त्रयोविंशतितमः पटलः।
" " वज्रसत्त्वोत्पत्तिपटलश्चतुर्विंशतितमः।
" " मञ्जुवज्रसाधनपटलः पञ्चविंशतितमः।
" " डाकवज्रसाधनपटलः षड्विंशतितमः।
" " महारहस्य-आलिडाकस्य साधनपटलः सप्तविंशतितमः।
" " प्रणवडाकसिद्धिनिमित्तनिर्देशपटलो नामाष्टाविंशतितमः।
" " समयसंवरोद्भवे महामण्डलराजानाम ऊनविंशतिमः पटलः।
" " धूतगुणोत्पत्तिपटलस्त्रिशतितमः।
" " वर्षापणविधिपटल एकत्रिंशत्तमः।
" " विश्वरूपसाधनपटलो द्वात्रिंशत्तमः।
" " त्रिगुरुसमयोत्तमपटलस्त्रयस्त्रिशत्तमः।
" " कवचद्वययोगोत्पत्तिभावनापटलश्चतुस्त्रिशत्तमः।
" " छोम्मापटलः पञ्चत्रिंशत्तमः।
" " योगिनीलक्षणपटलः षट्त्रिंशत्तमः।
" " डाकिनीलक्षणपटलः सप्तत्रिंशत्तमः।
" " रामालक्षणपटलोऽष्टत्रिंशत्तमः।
" " छोम्मापटल ऊनचत्वारिंशत्तमः।
" " अङ्गमुद्रालक्षणपटलश्चत्वारिंशत्तमः।
" " डाकिन्याङ्गमुद्रालक्षणपटल एकचत्वारिंशत्तमः।
" " डाकिनीछोमालक्षणपटलो द्वाचत्वारिंशत्तमः।
" " दूतसौख्याम्बुपटलस्त्रिचत्वारिंशत्तमः।
" " डाकिनीवीराकर्मप्रसरसाधकयोगिनीवीरहृदयद्वयपटलश्चतुश्चत्वारिंशत्तमः।
" " प्रतिमाविधिप्रतिष्ठापनाधिवासनं नाम पञ्चचत्वारिंशत्तमः पटलः।
" " मण्डनविधिपटलः षट्चत्वारिंशत्तमः।

इति अभिधानोत्तरे गायत्र्याः सन्ध्यावन्दनपटलः सप्तचत्वारिंशत्तमः।
" " उपहृदयसाधनोत्पत्तिभावनापटलोऽष्टचत्वारिंशत्तमः।
" " द्वाविंशत्यक्षरहृदयोत्पत्तिभावनापटल एकोनपञ्चाशः।
" " मण्डलविधिपटलः पञ्चाशः।
" " धर्मधातुपुरभावनापटल एकपञ्चाशत्तमः।
" " गुह्यभावनापटलो द्वापञ्चाशत्तमः।
" " गुह्याक्षरोत्पत्तिसाधनपटलस्त्रिपञ्चाशत्तमः।
" " मूलमन्त्रखटिकोद्धारपटलश्चतुःपञ्चाशत्तमः।
" " कवचहृदयभावनापटलः पञ्चाशत्तमः।
" " हृदयमन्त्रकवचौ देव्या हृदयभावनापटलः षट्पञ्चाशत्तमः।
" " रक्षाचतुर्मुखाधिष्ठानलिपिमण्डलचतुःक्रोधवज्रहूँकारोत्पत्ति-खटिकोद्धारपटलः सप्तपञ्चाशत्तमः।
" " वर्गयोगपटलोऽष्टपञ्चाशत्तमः।
" " गर्दभाकारस्वेच्छासिद्धिनिमित्तपटल एकोनषष्टितमः।
" " ज्ञानगुह्यपटलः षष्टितमः।
" " चतुर्देव्याः सम्पुटगुह्यपटल एकषष्टितमः।
" " वज्रभैरवक्रोधाधिपतिसंपुटाध्यासपटलो द्वाषष्टितमः।
" " सप्तजन्मपशुसाधनपटलस्त्रिषष्टितमः।
" " स्वाधिष्ठानं स्वधर्माक्षरोत्पत्तिभावनापटलश्चतुःषष्टितमः।
" " आत्मभावपूजापटलः पञ्चषष्टितमः।
" " नामसंवरगुह्यातिगुह्यरहस्यमहातन्त्रराजानन्तिकाक्षरतत्त्वोपदेशभावनापटलः षट्षष्टितमः।

**विशेष वक्तव्य**

अभिधानोत्तर तन्त्र एक विशाल ग्रन्थ है, जिसमें वर्णित विषयों का निर्देश ऊपर 66 पटलों की पुष्पिकाओं में दिया गया है। यह अनुत्तरयोग के अन्तर्गत योगिनी-तन्त्रों में गिना जाता है, जिनका आधार चक्रसंवर तन्त्र है। यह प्राचीन ग्रन्थ है, 11वीं शताब्दी में दीपंकर श्रीज्ञान तथा रिनचेन जङ्पो ने सर्वप्रथम इसका तिब्बती भाषा में अनुवाद किया। इसमें अन्य ग्रन्थों के उद्धरण नहीं हैं, केवल 43वें पटल में—

"तत्त्वसंग्रहे च यदुक्तं तथोक्तं चक्रसंवरे।
गुह्यतन्त्रे समाख्यातं हरितन्त्रे तथैव च॥
महाभैरवतन्त्रे ........"

तथा 57वें पटल में—"तत्त्वसंग्रहे च मूलतन्त्रे संवरे वा तथैव च" ये नाम मिलते हैं। इसमें कुछ अपभ्रंश गाथाएँ भी आई हैं, जो नीचे दी जा रही हैं—

लब्ध हायइ सुरता महासुह अअज्जु अलललहोः।
महासुह सअल तथागत इदिदर्थ ॥—(पटल 2)

हुं रमरमहोः महासुह बहु महासुह जाररसेन होपइ अज्जु अलललहोः।
परममहासुह तुआ जानहु मह हणेण मइ खज्जसि अज्ज होः
भगवान् महातुष्य होः ॥

को मोहि मह्य बिहरसि संवर पउमा अलललहोः।
वर कुलिश हरजालसुह अजात विअसिअ मुह।
पउम वरूपउमरावा अ विवोह दण्ड कमण्डलु सुर अपहरेण महासुह।
अज्जा जे कुलिशोत्तमसुर मज्जु किज्जयै
सअल सुरागमुज्ज बोधिसमागमु लभिसहि अज्ज।
अलललहोः समयातु मुकुज्जु अलललहोः॥—पटल 4

होः पइपाविउ तिभुवनसोज्ज अलललहोः।
करुणामणि अरु मुच्चहि वज्ज ॥

फारु महासुह जिनसंभारु अलललहोः
पमुञ्च तथागत दशदिउसारु ॥
पइसह सर्वहिसोरु। कान्तासुरअसमागमु तिहु अणसारु ॥ अलललहोः।
सुर आदि पमुञ्च। महोच्छ अजिनो हि महोः ॥—पटल 6

लहल पई सुअ महासुह अङ्गु। अलललहोः।
महासुह सअल तथागत दिट्ठु ॥—पटल 8

अभिसेउ रमह महासुह डाइणि जालु
महासुह समदउ महासुरअ महासुह डाइणि जालु ॥
महासुह पहुँ जउ महासुरअसुह डाइणि जालु।
महासुह अज्जीविउ महासुह डाइणि जालु ॥
महासुह अलललहोः।
महासुह परम डाइणि जालु महासुह अलललहोः।—पटल 11
रमहे णद्वाण सुरअ महासुह वरजोइणि कमलु मुहु।
अलललहोः सुरघ उत्तम सुहु।
मह्यं सिजप्रउवर जोइणि जालमहो
आइ आआरहो आरु हे विणु भुहु अ ाणाउ सुरअसुह।

देहि चरडाइणि जाल मुहु। विषयण उण हाणयण।
एवं हि महासुह सज्ज।
सुहु मोक्षोपलक्षु सुहु न इन्दुः खलु ह्वइ मोक्षु सुह पसरइ पङ्कउ गुणवरु।
अपरभुजं तु अतश्च मृच महासुहु अलिवर पाडाउ सुहु अरविउ शशि अपउरसु॥
—पटल 22

**3. योगिनीसंचारतन्त्र**

**ग्रन्थ**—योगिनीसंचार तन्त्र

**संख्या**—ल० सं० 4.20, रील नं० A 48.5

**पत्र संख्या**—10, **पंक्ति प्र०प०**–7–8, **अक्षर प्र०प०**–70

**आधार**—ताड़पत्र, **लिपि**–मैथिली, **पूर्ण**

**प्रारम्भ**

ॐ नमः श्रीहेरुकनाथाय
अथातः संप्रवक्ष्यामि सञ्चारविधिमुत्तमम्।
तारयेऽहं त्रिचक्रात्मा योगमार्गव्यवस्थिता॥
गोपितं यत्तथा तन्त्रेऽनुलोमविलोमसंस्थितम्।
उद्देशं च यथा प्रोक्तं निर्देशं च तथैव च॥
प्रतिनिर्देशं समस्तं वै संकेतविधिविस्तरम्।
येन विज्ञातमात्रेण साधकः सिद्धिमाप्नुयात्॥
सप्तत्रिंशेन योगेन बोधिपक्षव्यवस्थिताः।
लोके प्रभाव्य विख्याताः श्रीहेरुकं जगतः परम्॥

**अन्त**

पूर्वारे चक्रस्य सौराष्ट्रम्। उत्तरारे ......। पश्चिमारे मरु। दक्षिणारे कुलता। ऐशानारे नगर। वायव्यारे ......। निऋत्यारे ......। आग्नेय्यारे ओड्रविषयः। एते पीठोपपीठ-क्षेत्रोपक्षेत्र-छन्दोहोपछन्दोह-मेलापकोपमेलापक-श्मशानोपश्मशान इति दश विशुद्धाः। ॐ हः हृदि नमः शिरः स्वाहा हूँ शिखायां वषट् हे स्कन्धौ हूँ हूँ हो चक्षुषोः फट् फट् हं सर्वाङ्गेषु कवचः। ॐ ह्री ह ह हूँ हूँ फट्। ॐ धर्मधातुवज्रस्वभावात्मकोऽहम्।

**पुष्पिका**

इति योगिनीसञ्चारक्रमविधिः।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म नेपाल राष्ट्रीय अभिलेखालय, काठमांडू से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसके अनुसार यह विवरण दिया गया है।

**विषय निर्देश**

इस ग्रन्थ में प्रतिपादित विषयों का निर्देश अवान्तर पुष्पिकाओं में मिल जाता है, जो इस प्रकार हैं—

इति योगिनीसंचारे देवतायतनविशुद्धिनिर्देशः प्रथमः।

" " सप्तत्रिंशद्बोधिपाक्षिकधर्मनिर्देशो द्वितीयः।

" " सप्तत्रिंशद्बोधिपाक्षिकदेवताविशुद्धिनिर्देशस्तृतीयः।

" " वीराङ्गरागविशुद्धिनिर्देशश्चतुर्थः।

" " देवतातन्त्रे···· निर्देशः पञ्चमः।

" " स्वचिह्नमुखभुजवर्णाम्बुधिनिर्देशः षष्ठः

" " कवचद्वयनिर्देशः सप्तमः।

" " ज्ञानचक्राकर्षणसंचारनिर्देशोऽष्टमः।

" " प्रवृत्तिनिर्देशो नवमः।

" " वल्युपगमसप्तपालनिर्देशो दशमः।

" " सर्वविशुद्धिनिर्देश एकादशमः।

" " सर्वतन्त्रनिर्णयतत्त्वैकपदनिर्देशो द्वादशमः।

" " आलिकालिसर्वकर्मनिर्णयाद्वयनिर्देशस्त्रयोदशः।

" " चतुर्वीरसंयोगहस्तपूजानिर्देशश्चतुर्दशमः।

" " चर्याव्रतमन्त्राद्वयनिर्देशः पञ्चदशमः।

" " सिद्धिनिश्चयश्रीहेरुककरुणनिर्देशः षोडशमः।

" " तत्त्वविशुद्धिपीठस्थाननाशचर्यानिर्देशः सप्तदशमः।

ये पुष्पिकाएँ पत्रसंख्या 9 क में समाप्त हो जाती हैं। इसके बाद 10 ख तक संचार क्रम की विधि है। इसमें अठारहवें निर्देश की पुष्पिका नहीं है।

## 4. योगिनीसंचारतन्त्र टीका

**ग्रन्थ**—योगिनीसंचारतन्त्र टीका

**ग्रन्थकार**— महापण्डिताचार्य अलककलश

**संख्या**—3.683, रील नं० A 1279.2

**पत्र संख्या**—91, **पंक्ति प्र० प०**—7, **अक्षर प्र० प०**—45
**आधार**—ताड़पत्र, **लिपि**—नेवारी, **अपूर्ण** ।

**प्रारम्भ**

ॐ नमः श्री हेरुकाय

यामत्र मुद्राक्रमभावनेन प्रोन्मूलिताशेषविकल्पजालम् ।
श्रीहेरुकं तं प्रणिपत्य मूर्ध्ना तद्देश[कं चापि] गुरुं तथैव ॥
संप्राप्य तस्मादुपदेशलेशं सच्छिष्यसंचोदनया यथावत् ।
हिताय तेषां प्रकटैर्वचोभिः संचार[तन्त्रं विवृ]णोमि नित्यम् ॥

इह हि प्रथमतरं श्रीचक्रसंवरतन्त्राधिमुक्तकेन योगिना विनिर्वृत्तप्राकृताह······ भवितव्यमिति तदर्थमादौ भगवता स्कन्धायतनविशुद्धिनिर्देशः प्रथमोऽभिहितः। ततस्तथा ······नालौकिकलोकोत्तरमार्गभावना कर्तव्येति तत्प्रतिपादनार्थे बोधिपाक्षिकधर्मनिर्देशः सप्तत्रिंशतिश्च बोधिपाक्षिका धर्मा मन्त्रमहायानाधिमुक्तिकेन पुद्गलेन सप्तत्रिंशदात्मकमण्डल······ ।

**अन्त**

एवं चर्याव्रतस्थस्यावरो विशेषकथनरूपश्च रूपं प्रतिपाद्याभिनयं च तुष्टो यादृशं वक्तुमाह—आलिङ्गितमित्यादि। अङ्गमुखेन कृतसाह्निकः। हस्तपादविक्षेपलक्षणम्। वाचिकमिति। वाग्द्वारेण प्रवृत्तत्वात्। आहार्यमिति। चेतसामसंहारणीयम्। सात्त्विकमिति। हृदयदार्ढ्यबलेन निष्पन्नम्। चत्वार इति। न संख्याः। अभिनय इति। नात्र प्रकारविशेषाः। एत इति। चतुरस्रादियुक्ता ज्ञातव्या अभिगन्तव्याः। केनेत्याह। तत्त्वदर्शनेति। चर्यातत्त्वव्रतपरिज्ञानवता योगिनेति। एवमभिनयचतुष्टय····

**पुष्पिका**

इति श्रीपण्डिताचार्य अलककलशविरचितायां योगिनीसंचारतन्त्रटीकायां उपदेशानुसारिण्यभिधायां प्रथमपटलविस्तारव्याख्या।
इसी प्रकार द्वितीय से सप्तदश पटलों की पुष्पिका है। किसी में विषयनिर्देश नहीं है।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म नेपाल राष्ट्रीय संग्रहालय, काठमाँडू से शान्तरक्षित ग्रन्थालय में आई है, इसी के आधार पर यह विवरण दिया गया है। इसमें

यद्यपि पत्रों की क्रमसंख्या 1 से 124 तक है, किन्तु 1 से 76 तक ठीक है, आगे बीच-बीच में कुल मिलाकर 33 पत्र नहीं हैं। इससे पुस्तक अपूर्ण हो गई है। एक दूसरी प्रति मनवज्र वज्राचार्य के संग्रह से भी आई है। वह 15 वें निर्देश तक ही है, उसमें भी बीच में कई स्थानों पर पाठ खण्डित है।

## 5. गुह्यावली

**ग्रन्थ**—गुह्यावली
**ग्रन्थकार**—दउड़ीपाद
**संख्या**—1-1697 5/0
**पत्रसंख्या**—6 ( 13-18 ), **पंक्ति प्र० प०**—4, **अक्षर प्र० पं०**—48
**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण**

### विवरण

इस ग्रन्थ की फोटो कापी सं० सं० वि० वि० के सरस्वतीभवन ग्रन्थालय से प्राप्त हुई है, जो वहाँ राष्ट्रीय अभिलेखालय काठमांडू नेपाल से नेपाल जर्मन मैनु० प्रिज० प्रोजेक्ट से आई थी। इसमें 18 पत्र हैं, जिनमें पञ्चाकाराभिसंबोधि, मुद्रान्वय आदि ग्रन्थ भी हैं, जो अपूर्ण और अव्यवस्थित हैं। गुह्यावली के भी प्रथम श्लोक के 2 पद इसमें नहीं हैं, जिन्हें हम **साधनविधान** नामक ग्रन्थ से पूर्ण करके दे रहे हैं। इससे पूर्व 'धीः' के अंक 8, पृ० 26 में हम टीका सहित गुह्यावली का विवरण दे चुके हैं। तब हमें केवल 3 श्लोक टीका सहित प्राप्त हुए थे। 'धीः' में संगृहीत लुप्त बौद्ध वचनों में गुह्यावली और दउड़ीपाद नाम से जिन 10 पद्यों के उद्धरण लुप्त बौद्ध वचन संग्रह ( भाग 1 ) पृष्ठ 14-15 और पृ० 25-26 में आये हैं, वे सभी इसमें यथावत् उपलब्ध हैं। यह दउड़ीपाद की एकमात्र महत्त्वपूर्ण कृति उपलब्ध है, अतः इसे यहाँ पूर्ण रूप से दिया जा रहा है—

## गुह्यावली

ॐ नमः श्री वज्रयोगिन्यै

ताम्रं काञ्चनतां न गच्छति महाक्लेशैरपि प्राणिनां
प्रज्ञापङ्कजसेवयापि सहजानन्दे(न्दो) न संभाव्यते।
तस्माद् ये कृतपुण्यराशिवपुषः प्रादेशिकास्ते क्वचि-
न्मुद्राकुन्दुरुनिस्तरङ्गमनसः सिद्धास्तु तेभ्यो नमः ॥ 1 ॥
या संवित्परिवर्णिता भगवता वज्राब्जयोगात् क्व सा
सत्त्वानामथ सम्प्रदायगमने रागाद्विरागः परम्।

आनन्दद्वयमध्यवर्तिनि परिज्ञानोपदेशात्पुन-
स्तेषां सुरतसुखेन विहिता मुद्रादिमुक्तिस्थितिः ॥ 2 ॥

तत्रादौ विरमस्य शेषपदवीरागस्य मध्यक्षणे
त्यक्त्वा स्त्रीसुखमन्यदक्षरसुखं गृह्णाति यस्तन्मयः ।
स श्रीमान् घनसारमुद्रणविधौ विज्ञो गुरोराज्ञया
स्वानन्दासवपानघूर्णितमना नाभ्येति मोहं सुधीः ॥ 3 ॥

गवां यूथन्यायक्रमगमनसंभावितधियां
कथा केयं तेषामशनिपदमेरौ विदधति ।
अधिष्ठानादस्माद् गुरुचरणसंजातरभसा
स्वयं प्रज्ञासङ्गो भवति कृतिनोऽनुत्तरपदम् ॥ 4 ॥

गुरुः स्वाधिष्ठानादपहरति चित्तं मतिमतां
स्वसंवेद्यं ज्ञानं झटिति कुरुते दुर्लभमपि ।
मिलत्तूलोपाधिर्ज्वलति सहसा भास्करमणिः
स्वभावो वस्तूनां कथमपि न यो …… ति क्रमति ॥ 5 ॥

यदस्माभिः किञ्चिद्विदुरधरमार्गेष्वधिगतं
तदुक्तं स्वज्ञानान्न किमपि बुधा दूषणमिह ।
अतः प्रज्ञायोगाद् यदि भवति समाधानमधिकं
गुरोः स्वाधिष्ठानादपि च न तृतीयोऽस्ति विषयः ॥ 6 ॥

रागान्ते विरमप्रवेशसमये चन्द्रे स्वभावस्थिते
यो वित्ति मनसः प्रवृत्तिरपरो वायोर्निरुद्धा सृतिः ।
तत्काले यदनन्यसंभवसुखं साक्षात्परं तत्पदं
तत्र स्वानुभवो हि यस्य स पुनः सिद्धो महामुद्रया ॥ 7 ॥

विना प्रज्ञायोगं झटिति कुरुते वज्रपदवीं
सतां तद्योगाद्वा शिशिरकरसंबोधकरणात् ।
अधिष्ठानज्ञो यः स गुरुरिह नैवापर इति
प्रभावो यस्य द्राक् प्रभवति मनो दुर्जन इति ॥ 8 ॥

आनन्दद्वयमध्यजं क्षणमतिक्षुद्रं न संलक्ष्यते
तत्काले कथमाकरोति मनसा वज्राब्जयोगात्परम् ।
तस्मादक्षरसौख्यमेव सुजनैराश्रीयते यत्नतः
स्थित्वा तत्र चिरं समाहितजना गृह्णन्ति तत्त्वं पुनः ॥ 9 ॥

मृगाम्भः किं ग्राह्यं कमठनयनस्पन्दन इव
क्षणे साक्षात्कर्तुं पविजलजयोगश्रुतवताम् ।
चिरं चावस्थानादनुभवदशा संभवति सा
गते चन्द्रे वज्रात्पुनरिह हि सौख्यं न किमपि ॥ 10 ॥

प्रियासङ्गात्पूर्वं यदधिगतमात्यन्तिकसुखं
तदेवेदानीं चेत् किमधिवरमुद्राधिगमनम् ।
इहास्ते संविद्वाह्यसुखविषयादन्यदपरं
ततः कोऽप्येकोऽन्यः सहजसुखशम्भुः प्रभवति ॥ 11 ॥

गुरोः स्वाधिष्ठानाद् भवति विदुषामिन्द्रियलयो
लयात्संविन्मात्रं स्फुरति निरपेक्षं त्रिजगति ।
असामान्यात्किं भूयादचिरमधिकं तत्त्वमपरं
प्रतिज्ञातं यैस्ते भिदुरधरसंवादिवपुषः ॥ 12 ॥

अधिष्ठाने धन्ये जनितवरकर्मण्यपि सुरे
प्रभावः कोऽप्येष ध्वनयति तदन्तर्विनिहितम् ।
प्रभावस्याभावात् पशुसदृशयोगेश्वरनरः
सुरोऽप्यन्तःशून्यो मृदुगुरुशिलाकल्पितवपुः ॥ 13 ॥

अनभ्यासादस्मादनधिगतमार्गादवचना-
दकस्मादक्लेशात्सततमपरोक्षात् सपदि च ।
गुरोराज्ञानन्दादुपरतपदे यस्तु क्रियते
न संविन्मात्रं यद्भवति तदधिष्ठानमिति च ॥ 14 ॥

इह स्वाधिष्ठानक्रमजनितयोगैश्च यदयं
यदक्षा""""त्यजति स्वनिर्मोकसदृशम् ।
गृहीतो रागाद्यैरविरतमनोवृत्तिरसिकः
स्वसंविद्देवीं न प्रविशति जलेऽन्तस्तलमिव ॥ 15 ॥

एतत्पञ्चव्यसनरसिका यान्ति पापान्धकूपं
नो चेन्मोक्षं परिकृतपदाः स्वच्छ( ? )भूमेर्विभेदात् ।
तत्सन्देहं प्रविशति कथं निर्विकल्पावलेपात्
संसाराब्धेर्विहरति परः कः पुनस्तस्य पारम् ॥ 16 ॥

एते पञ्च नयन्ति मोहतटिनीपारं परा नौरिव
व्याघातः परमस्ति कोऽपि विपदां हर्तुर्य एको महान्।
अक्षाणामनुरागसुन्दरसुरापानप्रमत्तं मनः
स्फूर्जद्‌गन्धकरीन्द्र एष भुवने धावन् विषमां गां प्रति ॥ 17 ॥

सुरा नारीसङ्गेऽप्युपनयति पुंसः पविपदं
गृहीतं न त्यक्तं तदिह भवधीमत्त्वविहितः।
यदेकं पञ्चानामनुभव[ दृशा वर्ण-]सुखदं ?
द्वितीयं तद्व्यापि स्थिरचलमशेषं जगदिति ॥ 18 ॥

गुरोः पारम्पर्यक्रमजनितसंभावितधिया
तदेवाधिष्ठानं स्वपरवचनं क्षीयत इति।
यतो दीपाद्दीपः प्रभवति ततोऽप्येवमपरे
प्रदीपा जायन्ते क्रमश इह को विस्मय इव ॥ 19 ॥

ज्वलज्ज्वालो नीलज्वलनमनिशं शून्यभवने
जडो यस्तं यद् भजति स सुखी तत्र भवति।
गुरोः पादाम्भोजप्रणतिशतसंभूषितशिरो-
रजोरेखां लब्ध्वा सपदि कुरुते वज्रपदवीम् ॥ 20 ॥

अदूरे दूरे वा गुरुरिह कथा केयमसती
शिशोः संवित्सिद्धिर्भवति सहसा योजनशतैः।
नभोभागे भानुर्वि(नौ वि)कसति सरोजं विकसति
प्रभावः शक्तानां भवति किमयं विस्मयकरः ॥ 21 ॥

द्विधा तत्त्वज्ञानं सवचनमवाच्यं किमपि च
क्रमत्यङ्गादेकं यदपरमनङ्गात् क्रमति च।
द्वयोरेकत्वे यः सततमवबोधात् प्रभवति
स्वतः सिद्धः सोऽयं भिदुरधरमार्गोत्तरपदम् ॥ 22 ॥

प्राणी वज्रधरः कपालिवनितातुल्यो जगत्स्त्रीजनः
सोऽहं हेरुकमूर्तिरेष भगवान् यानप्रभिन्नो मयि।
श्रीपद्मं मदनं च गोकुदहनं कुर्वन् यथा गौरवा-
देतत्सर्वमतीन्द्रियैकमनसा योगीश्वरः सिद्ध्यति ॥ 23 ॥

क्वचित्प्रज्ञायोगात् क्वचिदपि च पञ्चेन्द्रियबलात्
क्वचित्स्वाधिष्ठानाद् गुरुवचनमार्गात् क्वचिदपि।
रुचेर्भेदात् पुंसि प्रकटयति वज्राङ्कितकरः
असिद्धं स्वासाध्यं किमपि यदवाग्गोचरपदम् ॥ २४ ॥

तत्रात्रश्रवनमत्र (?) न मेऽस्तु ताव-
ज्ज्ञानं न मे पदपदार्थकथासु धीराः।
चक्राङ्घ्रिपङ्कजरजःप्रणयादियं चेद्
गुह्यावली स्फुरति तत्किमहं करोमि ॥ २५ ॥

**इति वउडीपादीया गुह्यावली समाप्ता समाप्त ॥**

—: ❀ :—

# दुर्लभ ग्रन्थ परिचय : विविध परिशिष्ट

## ( अंक 9 से 15 )

**—जनार्दन पाण्डेय—**

'धीः' के अंक 1 से 8 तक **दुर्लभ ग्रन्थ परिचय** में लगभग 200 ग्रन्थों का परिचय दिया गया था, जो 'दुर्लभ बौद्ध ग्रन्थ परिचय' प्रथम भाग नाम से ग्रन्थ रूप में प्रकाशित हो चुका है। प्रथम 8 अंकों में विवृत ग्रन्थों-ग्रन्थकारों आदि की अनुक्रमणियाँ उसमें दे दी गई हैं। अंक 9 से 15 तक जिन ग्रन्थों का परिचय दिया गया है, उनकी अनुक्रमणी यहाँ दी जा रही है—

## उपर्युक्त विवृत ग्रन्थों में उपलब्ध ग्रन्थकार-नामानुक्रमणी

| ग्रन्थकार | अंक | पृष्ठ | ग्रन्थकार | अंक | पृष्ठ |
|---|---|---|---|---|---|
| अभयाकर गुप्त | 14 | 22 | दउड़ीपाद | 15 | 9 |
| अलककलश | 15 | 19 | दुर्जयचन्द्र | 12 | 14 |
| अश्वघोष | 13 | 16 | धर्माकर शान्तिपाद | 11 | 10 |
| आनन्दगर्भपाद | 14 | 8 | प्रभाकर गुप्त | 10 | 18 |
| आर्यदेव | 10 | 20 | महासुख वज्रपाद | 12 | 9 |
| काणेरीपाद | 12 | 21 | मैत्रेयनाथ | 14 | 9 |
| कुलदत्त | 15 | 21 | रत्नरक्षितपाद | 9 | 12 |
| गुणाकर पण्डित | 9 | 24 | वज्रपाणि | 11 | 4 |
| जयभद्र | 12 | 20 | वागीश्वरकीर्ति | 14 | 6 |
| तटकर गुप्त | 9 | 18 | संवरोदय टिप्पणी | 11 | 7 |

## प्रकाशित ग्रन्थ

| ग्रन्थ | अंक | पृष्ठ |
|---|---|---|
| अधिष्ठानमन्त्राः | 12 | 23–24 |
| अमनसिकारक्रमः | 10 | 8–12 |
| आर्यवाराहीरहस्यमालामन्त्र | 11 | 24 |
| गणेश्वरमालामन्त्र | 11 | 19 |
| गुरुपञ्चाशिका—अश्वघोष | 13 | 16–20 |
| गुह्यावली—दउड़ीपाद | 15 | 21–25 |
| नवश्लोकी—कम्बलाम्बरपाद | 8 | 13–14 |
| योगावतार—नागार्जुन | 4 | 21 |
| वज्रमहाकालमालामन्त्र | 11 | 19 |
| स्वाधिष्ठानप्रभेद—आर्यदेव | 10 | 20–24 |
| हेवज्रस्य मन्त्रहृदयधारिणी | 11 | 18 |

●

# लुप्त बौद्ध वचन संग्रह : विविध परिशिष्ट

## ( अंक 9 से 15 )

—डॉ० बनारसीलाल—

[ 'धीः' के प्रथम अंक से आठवें अंक तक इस शीर्षक के अन्तर्गत प्रकाशित पूरी सामग्री को 'लुप्त बौद्ध वचन संग्रह' भाग–1 शीर्षक से पृथक् ग्रन्थ के रूप में प्रकाशित किया गया था। उसके बाद 9 वें अंक से 14 वें अंक तक पर्याप्त वचन संगृहीत हुए हैं। पृथक् ग्रन्थ के अभाव में इस पूरी सामग्री से 'धीः' के पाठक परिचित हो सकें और शोध की दृष्टि से वचनों की उपलब्धता सरलता से हो सके, इसके लिये यहाँ संकेतसूची और श्लोकार्धानुक्रमणी संयोजित की जा रही है। यहाँ उन ग्रन्थों और ग्रन्थकारों के नाम भी संकेतित कर दिये गये हैं, जहाँ के ये वचन हैं।

उक्त ग्रन्थ में 'धीः' 5 वें अंक में संगृहीत अपभ्रंश वचनों का समावेश नहीं किया जा सका था। बाद में 14 वें अंक में भी अपभ्रंश वचनों का संग्रह किया गया। इन दोनों अंकों में संकलित सामग्री की भी संकेतसूची और श्लोकार्धानुक्रमणी यहाँ दी जा रही है। गद्यानुक्रमणी का भी यहाँ समावेश किया गया है। अन्त में आधार ग्रन्थों की सूची भी प्रकाशन स्थान के साथ दे दी गई है।

लुप्त बौद्ध वचन संग्रह, प्रथम भाग के उपोद्घात में 115 ग्रन्थों और ग्रंथकारों का परिचय दिया गया था, जिनके कि वचन यहाँ संगृहीत हुए हैं। आगे के अंकों में जिन ग्रन्थों और ग्रन्थकारों की सामग्री ली गई है, इनमें से अधिकांश का परिचय उक्त स्थल पर मिल जायगा। इसके अतिरिक्त ग्रन्थों और ग्रन्थकारों के विषय में यथास्थान टिप्पणियाँ दे दी गई हैं। ]

### ग्रन्थ-ग्रन्थकार संकेतसूची

| संकेताक्षर | ग्रन्थ-ग्रन्थकार | संकेताक्षर | ग्रन्थ-ग्रन्थकार |
|---|---|---|---|
| अ. धा. | अनन्तमुखनिर्हारधारणी | अ. प्र. धा. | अविकल्पप्रवेशधारणी |
| अ. प्र. | अविकल्पप्रवेश | अ. वि. त. | अद्वयसमताविजयमहायोगतन्त्र |

| संकेताक्षर | ग्रन्थ-ग्रन्थाकार | संकेताक्षर | ग्रन्थ-ग्रन्थकार |
|---|---|---|---|
| आ. प. | आचार्यपरीक्षा | बो. वि. | बोधिचित्तविवरण |
| आ. बु. | आदिबुद्ध | म. सू. | महायानरत्नराजसूत्र |
| ए. सू. | एकनयनिर्देशसूत्र | मू. त. | मूलतन्त्र |
| क. प्र. सू. | कर्मावरणप्रतिप्रस्रब्धिसूत्र | र. धा. | रत्नोल्काधारणी |
| का. च. | कालचक्र | र. म. सू. | रत्नचूडामणिसूत्र |
| कि. प. सू. | किन्नरराजपरिपृच्छासूत्र | रि. त. | रिगि-अरल्ली महातन्त्र |
| गु. ति. | गुह्येन्दुतिलक | लू. पा. | लूयीपाद |
| गु. स्तो. | गुणापर्यन्तस्तोत्र | व. धा. | वज्रमण्डधारणी |
| च. परि. | चतुर्देवीपरिपृच्छा | व. प. | वज्रपञ्जर |
| च. की. | चन्द्रकीर्ति | व. मा. | वज्रमाला |
| च. मु. | चतुर्मुद्रान्वय | व. शे. | वज्रशेखर |
| च. मु. उ. | चतुर्मुद्रोपदेश | वैरो. | वैरोचनाभिसम्बोधि |
| च. पी. | चतुष्पीठ | स. भ. | समन्तभद्र |
| च. सं. | चक्रसंवर | स. | समाज |
| जा. धा. | जाङ्गुलीधारणी | स. उ. | समाजोत्तर |
| डा. | डाकार्णव | स. नि. सू. | सर्वधर्मप्रवृतिनिर्देशसूत्र |
| त. गु. को. | तथागतगुह्यकोशसूत्र | स. रा. त. | समाधिराजतन्त्र |
| त. गु. सू. | तथागतगुह्यसूत्र | स. र. त. | सर्वरहस्यतन्त्र |
| त्रि. रा. | त्रिसमयराज | सं. व्या. | संधिव्याकरण |
| ना. पा. | नागार्जुनपाद | सं. त. | संवरतन्त्र |
| पर. | परमाद्य | संव. | संवरोत्तर |
| पु. धा. | पुष्पकूटधारणी | ह. क. | हस्तिकक्ष |
| बृ. बु. | बृहदादिबुद्ध | ह. क. सू. | हस्तिकक्ष्यसूत्र |

•

## उद्धृतवचनानुक्रमणी

## गद्यानुक्रमणी

—:❀:—

## संकेत-सूची

| | |
|---|---|
| अ. प्र. सि. | अद्वयविवरणप्रज्ञोपायविनिश्चयसिद्धि |
| अ. क. | अमृतकणिका |
| कृ. त. | कृष्णयमारितन्त्र |
| क्रि. स. | क्रियासमुच्चय |
| क्रि. सं. | क्रियासंग्रह |
| ख. त. टी. | खसमतन्त्रटीका 'खसमा' |
| व. व. | वज्रावली |

| | |
|---|---|
| वि. प्र. | विमलप्रभा |
| सा. मा. | साधनमाला |
| से. टी. | सेकोद्देशटीका |
| हे. त. | हेवज्रतन्त्र |
| हे. त. टी. | हेवज्रतन्त्रटीका 'योगरत्नमाला' |

## अपभ्रंश-वचनानुक्रमणी

| | अंक | पृष्ठ | | अंक | पृष्ठ |
|---|---|---|---|---|---|
| अकस्वरू मंत्र चिज्जि ( क्रि. सं. ) | 5 | 36 | आकास विजाअल देखी ( से. टी. ) | 5 | 35 |
| अक्खरमन्तविवज्जियओ ( सा. मा. ) | 5 | 33 | आज्ज देव निरालें ( अ. क. ) | 14 | 26 |
| अक्षक्करु करुणअ ( व. व. ) | 5 | 36 | आध उग्घाडे लोअणे ( से. टी. ) | 5 | 34 |
| अङ्ग डोम्बी च्छेय मणु ( क्रु. त. ) | 14 | 31 | इदं बलिं भुज्ज जिघ्र ( हे. त. ) | 5 | 30 |
| अच्चउ किं बहु बोल्लिऐ ( से. टी. ) | 5 | 34 | इ नउ भव नउ णिव्वाण (अ. प्र. सि.) | 14 | 25 |
| अडेडे किट्टयमारि ( क्रु. त. ) | 14 | 27 | इन्द जम जल जक्ख ( हे. त. ) | 5 | 30 |
| अणिमिस लोअण च्चिअ ( अ. क. ) | 14 | 26 | इन्दी आली उट्ठ तुहुं ( हे. त. ) | 5 | 31 |
| अद्ध उघाडें लोअने ( से. टी. ) | 5 | 35 | इन्दी जत्थु विलीजग ( क्रि. सं. ) | 14 | 31 |
| अनुभव वोहरअण ( से. टी. ) | 5 | 34 | इंदीय खे विलीयगौ ( क्रि. स. ) | 5 | 36 |
| अन्तराल जइ नऊ ( से. टी. ) | 5 | 35 | इन्द्रा आली उठ तुह ( क्रु. त. ) | 14 | 31 |
| अन्तरालमणपवण ( से. टी. ) | 5 | 35 | उइअ उरे भुसुकु ( से. टी. ) | 5 | 34 |
| अपुब्ब वसन्त दुकेल्ला ( से. टी. ) | 5 | 35 | उइ दूरे गअण मज्जो ( अ. क. ) | 14 | 26 |
| अम्भ कज्ज सब्व साध ( हे. त. ) | 5 | 30 | उट्ठ भराडउ करुणा ( क्रु. त. ) | 14 | 28 |
| अम्भे डोम्बी छेअमण्ड ( हे. त. ) | 5 | 31 | उट्ठ भराडो करुण ( हे. त. ) | 5 | 31 |
| अलललल्हो महासुहेण ( सा. मा. ) | 5 | 33 | उट्ठ भराडो करुण ( क्रु त. ) | 14 | 30 |
| अवसउ अज्जइ जिन ( से. टी. ) | 5 | 35 | उट्ठ भराडो चित्ते ( क्रु. त. ) | 14 | 29 |
| अहवा करुणा केवलि ( अ. प्र. सि. ) | 14 | 25 | उट्ठ भराडो लोअह ( क्रु. त. ) | 14 | 29 |
| आइ न अन्त न मह्यु ( हे. त. ) | 5 | 31 | उट्ठहि तुह हेवज्ज ( क्रु. त. ) | 14 | 31 |
| आइ बुद्धक अभावहो ( ख. त. टी. ) | 14 | 33 | एअमणा तिसृइ वज्ज ( ख. त. टी. ) | 14 | 33 |
| आइमउं एवं विदि ( ख. त. टी. ) | 14 | 32 | एककाल जइ जो धम्म ( से. टी. ) | 5 | 35 |
| आकटचीअ निरालें ( से. टी. ) | 5 | 34 | एक सहावे खाज्ज ( क्रि. स. ) | 5 | 36 |
| आकड़ करुणा डमरु ( अ. क. ) | 14 | 26 | एकु महाधनि तथता (क्रु. त. ) | 14 | 30 |

—: ❀ :—

## आधार ग्रन्थ


1. अद्वयविवरणप्रज्ञोपायविनिश्चयसिद्धि ( गुह्यादि-अष्टसिद्धिसंग्रह )—के० उ० ति० शि० सं०, सारनाथ, वाराणसी, 1987.
2. अमृतकणिका-नामसंगीतिटिप्पणी—( अप्रकाशित शोधप्रबन्ध ) सम्पूर्णानन्द संस्कृत विश्व-विद्यालय, वाराणसी, 1989.
3. क्रियासंग्रह—शतपिटक सीरीज़, इण्टर नेशनल एकेडमी आफ इण्डियन कल्चर, नई दिल्ली।
4. खसमतन्त्रटीका—संकाय पत्रिका, भाग—1, संस्कृत विश्वविद्यालय, वाराणसी।
5. गुह्यसमाजप्रदीपोद्योतन—भोटदेशीय संस्कृत ग्रन्थमाला, पटना, 1984.
6. गुह्यादि-अष्टसिद्धिसंग्रह—के० उ० ति० शि० सं०, सारनाथ वाराणसी, 1987.
7. डाकिनीजालसंवररहस्य—के० उ० ति० शि० सं० सारनाथ, 1990.
8. दुर्लभ ग्रन्थ परिचय ( भाग—1 ), के० उ० ति० शि० सं०, सारनाथ 1990.
9. पञ्चक्रम—युनिवर्सिटे गेंट, 1896.
10. बोधिचर्यावतारपञ्जिका—बौद्ध संस्कृत ग्रन्थावली, मिथिला विद्यापीठ, दरभंगा।
11. भावनाक्रम—के० उ० ति० शि० सं०, सारनाथ, वाराणसी।
12. मध्यमकशास्त्र ( प्रसन्नपदा )—बौद्ध संस्कृत ग्रन्थावली, मिथिला विद्यापीठ, दरभंगा।
13. वसन्ततिलकटीका—के० उ० ति० शि० सं०, सारनाथ, वाराणसी।
14. विमलप्रभा—( योजना की प्रेस कापी, 3-4 पटल )।
15. शिक्षासमुच्चय—बौद्ध संस्कृत ग्रन्थावली, मिथिला विद्यापीठ, दरभंगा।
16. सर्वदर्शनसंग्रह—भाण्डारकर ओरियन्टल रिसर्च इंस्टीच्यूट, पूना, 1978.
17. सुभाषितसंग्रह—ले मेसन, वाल्यूम 4, 1903 एवं वाल्यूम—5, 1904.




# बौद्ध पारिभाषिक शब्दानुक्रमणी : विविध परिशिष्ट

## ( अंक 9 से 15 )

**—ठिनलेराम शाशनी—**

[ दुर्लभ बौद्ध ग्रन्थ शोध योजना की षाण्मासिक पत्रिका 'धी:' में "बौद्ध पारिभाषिक शब्दों का अभिप्राय" शीर्षक से बौद्ध तन्त्र ग्रन्थों में प्रयुक्त पारिभाषिक शब्दों को संकलित कर प्रकाशित किया जाता है। इस योजना की आठवें अंक तक की सामग्री को संगृहीत कर भूमिका तथा अनुक्रमणियों के साथ "बौद्ध तन्त्र कोश ( भाग–1 )" नाम से प्रकाशित किया जा चुका है। इसमें महत्त्वपूर्ण 22 बौद्ध तन्त्र ग्रन्थों से सात सौ से अधिक शब्दों के अर्थ संकलित हैं। इस 15वें अंक में शोध अध्येताओं की सुविधा हेतु 9वें से 14वें अंक तक के पारिभाषिक शब्दों को संगृहीत कर अकारादि क्रम से अनुक्रमणी दी जा रही है। साथ ही उन शब्दों की व्याख्या में आये अवान्तर पारिभाषिक शब्दों की भी अलग से अनुक्रमणी संलग्न है। उक्त अंकों में अभिसमयमञ्जरी ( अ० स० म० ), रविश्रीकृत-अमृतकणिकानामसंगीतिटिप्पणी ( अ० क० ), कृष्णयमारितन्त्र ( सटीक ) ( कृ० त० टी० ), आचार्य रत्नाकरशान्ति विरचित खसमा नाम टीका ( ख० त० टी० ), गुह्यसमाजतन्त्र (गु० स०), डाकिनीजालसंवररहस्य (डा० जा० सं० र०), रत्नाकरशान्ति विरचित महामायातन्त्रटीका ( म० त० टी० ) तथा कल्किश्रीपुण्डरीकविरचित लघुकालचक्रतन्त्रराजटीका विमलप्रभा ( वि० प्र० ) आदि ग्रन्थों से शब्दों को संगृहीत किया गया है। ]

•

## अवान्तर पारिभाषिक शब्दानुक्रमणी

●

# बोधिपाक्षिक धर्म

—प्रो० रामशंकर त्रिपाठी—

[ सैंतीस बोधिपाक्षिक धर्मों में चार स्मृत्युपस्थान, चार सम्यक् प्रहाण, चार ऋद्धिपाद, पाँच इन्द्रिय, पाँच बल, सात बोध्यंग और आठ मार्गांगों का समावेश है। प्रस्तुत निबन्ध में पालि और पारमिता साहित्य के आधार पर इन सबका विशद स्वरूप प्रस्तुत किया गया है। वसन्ततिलका जैसे मन्त्रयान के ग्रन्थों में सैंतीस बोधिपाक्षिक धर्मों के बाह्य और आन्तर स्वरूप का विवेचन मिलता है। इन्द्रियों और बलों का निरूपण पातंजल योगसूत्र ( 1.20 ) में भी किया गया है। निष्ठा नाम की अन्तिम पाँचवीं अवस्था का उल्लेख लकुलीश पाशुपत मत के गणकारिका नामक ग्रन्थ में है और भासर्वज्ञ ने अपनी टोका में इसकी व्याख्या की है ( पृ० 8 )। इस निबन्ध की सहायता से हम इन सब विषयों का तुलनात्मक दृष्टि से गहन अध्ययन कर सकते हैं। ]

बोधि के पक्ष में होने वाले धर्म 'बोधिपाक्षिक' कहलाते हैं। इन्हें 'बोधिपक्ष्य' भी कहते हैं। बोधि का अर्थ है 'तत्त्व का अभिसम्बोध'। यह निर्विकल्पक ज्ञान है[1]। चार आर्यसत्यों को जानने वाला आर्य का मार्गज्ञान 'बोधि' है[2]। अथवा क्षयज्ञान और अनुत्पादज्ञान को 'बोधि' कहते हैं[3]। इस बोधि के अनुकूल होने वाले या उसके सहायक धर्म 'बोधिपक्षीय' कहलाते हैं। इनकी संख्या सैंतीस होती है, यथा—4 स्मृत्युपस्थान, 4 सम्यक् प्रहाण या सम्यक् प्रधान, 4 ऋद्धिपाद, 5 इन्द्रिय, 5 बल, 7 बोध्यंग एवं 8 मार्गांग = 37। बोधिपक्षभावना इसलिये प्रतिपक्षभावना कहलाती है, क्योंकि इन धर्मों की भावना से विपक्ष आवरणों का प्रहाण होता है।

### 4. स्मृत्युपस्थान

सैंतीस बोधिपाक्षिक धर्मों में से स्मृत्युपस्थान भावना को इसलिये पहले कहा गया है, क्योंकि इसकी भावना से चार आर्यसत्यों में अवतरण होता है। अवतरण का अर्थ है, प्रत्येक सत्य के लक्षणों का पृथक् अवबोध। स्मृत्युपस्थान यद्यपि चार हैं, किन्तु परमार्थतः ये एक स्मृति चैतसिक ही हैं। आलम्बन के चार प्रकार, उनके ग्रहण के चार आकार एवं प्रहाण कृत्य के चार प्रकार होने से स्मृत्युपस्थान चतुर्विध हैं।

---

1. मध्यान्तविभागटीका, स्थिरमतिकृत, पृ० 135.
2. विभंग, पृ० 300.
3. अभिधर्मदीप, 441 का०, पृ० 357.

निर्वाण के गुण और संसार के दोषों के अनवबोध के कारण लोक में चार प्रकार के विपर्यास ( विपरीत ज्ञान ) प्रचलित हैं, यथा—अनित्य में नित्य विपर्यास, दुःख में सुख विपर्यास, अनात्म में आत्म विपर्यास एवं अशुभ में शुभ विपर्यास। नाम-रूपात्मक सभी संस्कार धर्म अनित्य होते हैं, उनमें नित्य संज्ञा होना 'नित्य विपर्यास' है। दुःख-स्वभाव नाम-रूप धर्मों में सुख-संज्ञा होना 'सुखविपर्यास', अनात्मक सभी धर्मों में 'आत्मसंज्ञा' होना 'आत्मविपर्यास' तथा अशुभ नाम रूप धर्मों में शुभ संज्ञा होना 'शुभविपर्यास' है। मिथ्या ज्ञान, मिथ्या दृष्टि एवं मिथ्या संज्ञा विपर्यास के अन्तर्गत गृहीत हैं। निर्वाण के गुण एवं संसार के दोषों का अज्ञान और सुख आदि चार विपर्यास आर्य सत्यों के दर्शन से निवृत्त होते हैं, अतः संसार से उद्वेग पैदा करने के लिये और निर्वाण के अभिमुख करने के लिये चार सत्यों का अवबोध आवश्यक है। इसी कारण चार आर्य सत्यों में अवतरण के लिये स्मृत्युपस्थान भावना सर्वप्रथम ( सबसे पहले ) कही गई है।

1. **कायस्मृत्युपस्थान**—केश, लोम, नख, दन्त आदि बत्तीस अवयवों के समूह को 'काय' कहते हैं। काय स्मृत्युपस्थान द्वारा अशुभ संज्ञा के उत्पाद के लिये इन अवयवों का पुनः पुनः दर्शन किया जाता है, फलतः उनका अशुभ आकार ज्ञान में प्रतिभासित होने लगता है, फलतः इस स्मृत्युपस्थान द्वारा शुभविपर्यास का प्रहाण होता है[1]।

वस्तुतः काय दौष्ठुल्य से प्रभावित होता है। दौष्ठुल्य का अर्थ दुःस्थितता है। काय प्रतिक्षण विकृत ( परिवर्तित ) होता है, अतः दौष्ठुल्य से प्रभावित कहा जाता है। इसलिये काय की परीक्षा से दुःखसत्य में अवतरण होता है। हेतु प्रत्यय से उत्पन्न धर्म 'संस्कार' कहलाते हैं। दौष्ठुल्य से युक्त संस्कारस्वभाव होना 'दुःखसत्य' का लक्षण है। दुःखता त्रिविध है, यथा—दुःखदुःखता, विपरिणामदुःखता और संस्कारदुःखता। दुःख का प्रमुख अर्थ संस्कारदुःखता है। इसीलिये आर्य जन समस्त संस्कार धर्मों को 'दुःख' रूप में देखते हैं। संस्कारदुःखता ही दौष्ठुल्य है। यह आर्यों के प्रतिकूल होने से 'दुःख' है। विपरिणामदुःखता और दुःखदुःखता दोनों संस्कारदुःखता से अनुगत होने के कारण और निमित्त होने के कारण दौष्ठुल्य कही जाती हैं। इसी संस्कारदुःखता की वजह से पांचों उपादान स्कन्ध 'दुःख' कहे जाते हैं।

दौष्ठुल्य का अर्थ अकर्मण्यता भी है। अकर्मण्यता सास्रव होती है। सास्रव धर्म वासनाबीज से उत्पन्न होते हैं। अतः आलयविज्ञान में स्थित सास्रव धर्मों के बीज दौष्ठुल्य कहे जाते हैं। दुःख, सुख और अदुःख-असुख से समन्वित काय उन्हीं वासनाबीजों का फल है। इसलिये प्रतिक्षण विपरिणत होने वाले काय के द्वारा दौष्ठुल्य की प्रतीति होती है, जैसे खलबिल के अन्तर्गत निहित बीज की प्रतीति अङ्कुर द्वारा होती है। इसीलिये काय की परीक्षा से दुःखसत्य में अवतरण होता है[2]।

---

1. विभावनी, अभिधम्मत्थसंगहटीका, पृ० 171–172, विभंगट्ठकथा, पृ० 220.

2. स्थिरमति, मध्यान्तविभागटीका, पृ० 126.

**2. वेदनास्मृत्युपस्थान**—समस्त संस्कार धर्मों में दु:ख-आकार प्रतिभासित होने के लिये वेदनाओं का पुनः पुनः दर्शन करने वाली स्मृति 'वेदनास्मृत्युपस्थान' है। इस स्मृत्युपस्थान की भावना करनेवाला योगी जब सुखा वेदना या उपेक्षा वेदना का दर्शन करता है, तब भी उसमें विपरिणामदु:खता का दर्शन करता है। जब दु:खा वेदना का दर्शन करता है, तब उसके पीडन स्वभाव को देखता है। इस तरह सभी वेदनाओं में दु:खाकार प्रतिभासित होने के कारण यह स्मृत्युपस्थान सुखविपर्यास का प्रहाण करता है[1]।

वेदना तृष्णा का हेतु होती है, क्योंकि यह ( वेदना ) अविद्या-संस्पर्श से उत्पन्न होती है। सुखा वेदना वह होती है, जिससे संयोग की इच्छा ( तृष्णा ) होती है और विसंयोग की इच्छा नहीं होती। दु:खा वेदना वह है, जिससे संयोग की इच्छा नहीं होती और संयोग होने पर उससे विसंयोग की इच्छा होती है। अदु:खा-असुखा वेदना वह है, जिससे न संयोग की और न वियोग की ही इच्छा होती है, अपि तु जो स्थिति है, उसी में अभिरति होती है। व्यक्ति दु:खवेदना से स्पर्श होने पर कामसुख की अभिलाषा करता है, अतः दु:खवेदना भी सुख-तृष्णा का हेतु होती है। सुखवेदना के प्रति राग ( तृष्णा ) होना तो स्वाभाविक ही है। वेदना की परोक्षा करने से समुदयसत्य में अवतरण होता है। अर्थात् वेदना के स्वरूप, कारण, कार्य, उसकी अनित्यता आदि पर विचार करने से समुदयसत्य का बोध होता है, क्योंकि वह तृष्णा को वेदना का कार्य समझने लगता है, और 'तृष्णा' सूत्र में समुदयसत्य कही गई है। इस प्रकार वेदनास्मृत्युपस्थान द्वारा समुदयसत्य में अवतरण होता है[2]।

**3. चित्तस्मृत्युपस्थान**—चित्त का आलम्बन कर 'यह चित्त सराग है, यह चित्त वीत-राग है' इस प्रकार विभाग करके उसके अनित्याकार का प्रतिभास होने के लिये पुनः पुनः दर्शन करने वाली स्मृति 'चित्तस्मृत्युपस्थान' है। इस स्मृत्युपस्थान द्वारा नानाविध चित्तों के अनि-त्याकार का प्रतिभास होने से यह स्मृत्युपस्थान नित्यविपर्यास का प्रहाण करता है[3]।

आत्माभिनिवेश का आश्रय चित्त हुआ करता है, क्योंकि नित्य आदि गुणों से विशिष्ट किसी आत्मा नामक द्रव्य का सर्वथा अभाव है, अतः चित्त ही आत्मा कहा जाता है। फलतः चित्त की परीक्षा से शान्त निरोधसत्य में अवतरण होता है। आत्मोच्छेद के भय से दु:ख-संज्ञा प्रवृत्त होती है, चित्त के अनित्यत्व आदि की परीक्षा से उस भय का अपगम होता है और दु:खमात्र का उच्छेद होता है। अतः चित्तस्मृत्युपस्थान द्वारा निरोधसत्य में अवतरण होता है।[4]

1. विभावनी, अभिधम्मत्थसंगहटीका पृ० 172, विभंगट्ठकथा, पृ० 223-224.
2. मध्यान्तविभंगटीका, पृ० 127.
3. विभावनी, पृ० 172, परमत्थदीपनी, पृ० 304, विभंगट्ठकथा, पृ० 224.
4. मध्यान्तविभागटीका, पृ० 127.

4. **धर्मस्मृत्युपस्थान**—'धर्म' शब्द द्वारा यद्यपि सामान्यतया सभी धर्मों का ग्रहण होता है, किन्तु कायस्मृत्युपस्थान द्वारा रूपस्कन्ध का, वेदनास्मृत्युपस्थान द्वारा वेदना स्कन्ध का तथा चित्तस्मृत्युपस्थान द्वारा विज्ञानस्कन्ध का ग्रहण हो जाने से अब 'धर्म' शब्द द्वारा संज्ञास्कन्ध और संस्कारस्कन्ध का ही ग्रहण करना चाहिये। उन धर्मों का पुनः पुनः आलम्बन करके विपश्यना करने पर 'स्वलक्षण धारण करनेवाले ये ही परमार्थ धर्म हैं और परमार्थ धर्म ही विद्यमान होते हैं'—ऐसा ज्ञान होने से उनका अनात्माकार प्रतिभासित होने लगता है। अतः धर्मस्मृत्युपस्थान आत्मविपर्यास का प्रहाण करता है[1]।

धर्मों की परीक्षा से सांक्लेशिक और वैयवदानिक धर्मों के प्रति संमोह ( अज्ञान ) की निवृत्ति हो जाने से मार्ग-सत्य में अवतरण होता है। छह मूल क्लेश[2] और बीस उपक्लेश[3] ही 'सांक्लेशिक धर्म' हैं तथा इन क्लेशों और उपक्लेशों के प्रतिपक्षभूत प्रेम, मैत्री आदि धर्म 'वैयवदानिक धर्म' हैं। इन सांक्लेशिक और वैयवदानिक धर्मों के परस्पर विपक्ष-प्रतिपक्षभाव को जान लेने से सभी उपद्रवों के अत्यन्त प्रहायक मार्ग की ओर अभिमुखता होती है। अतः धर्मस्मृत्युपस्थान द्वारा मार्गसत्य में अवतरण होता है।

स्मृत्युपस्थान यद्यपि प्रज्ञास्वभाव होते हैं, फिर भी वह प्रज्ञा क्योंकि स्मृति के बल से उत्पन्न होती है, अतः वह 'स्मृत्युपस्थान' शब्द द्वारा कही जाती है। बोधिसत्त्वों की स्मृत्युपस्थान भावना निम्नलिखित दस आकारों की वज़ह से विशिष्ट होती है—

1. महायान में श्रुतमयी, चिन्तामयी और भावनामयी प्रज्ञा का आश्रय ग्रहण किया जाता है, अतः स्मृत्युपस्थानों की यह विशेषता आश्रय की दृष्टि से है। 2. नित्य, सुख, शुभ आदि चार विपर्यासों के अनित्य, दुःख, अशुचि एवं अनात्म आदि प्रतिपक्ष होने से काय, वेदना आदि धर्मों के नैरात्म्य में प्रवेश होता है, अतः यह प्रतिपक्ष की विशेषता है। 3. काय, वेदना आदि चार स्मृत्युपस्थानों के द्वारा क्रमशः दुःख, समुदय आदि चार सत्यों में स्वयं अवतरण होता है और दूसरों का भी अवतरण कराया जाता है, अतः यह अवतरण की विशेषता है। 4. सभी सत्त्वों के काय, वेदना आदि का आलम्बन किया जाने से यह आलम्बन की विशेषता होती है। 5. काय, वेदना आदि के अनुपलब्ध होने से मनस्कार की विशेषता होती है। 6. प्राप्ति की भी विशेषता होती है, क्योंकि काय, वेदना आदि के न विसंयोग के लिये और न अविसंयोग के लिये भावना की जाती है। 7. प्रतिपक्षभूत पारमिताओं के अनुकूल होने से आनुकूल्य की विशेषता होती है। 8. बोधिसत्त्वों को श्रावक और प्रत्येकबुद्धों को भी धर्मोपदेश करना होता है, अतः उनके अनुकूल

---

1. विस्तार के लिये द्रष्टव्य—विभंगट्ठकथा, पृ० 224.
2. राग, प्रतिघ, मोह, मान, दृष्टि और विचिकित्सा।
3. ईर्ष्या, क्रोध, मात्सर्य आदि बीस उपक्लेशों के लिये द्रष्टव्य–त्रिंशिका विज्ञप्तिमात्रतासिद्धि 12–14 का०।

